§ 20 **शेष भंग जो अवक्तव्य, अस्त्यवक्तव्य, नास्त्यवक्तव्य और अस्ति-नास्त्यवक्तव्य हैं वे भी यथोक्त नयके योगसे नेतव्य हैं** पहले तीन भगोको जिस प्रकार 'विशेषणत्वात्' हेतुसे अपने प्रतिपक्षीके साथ अविनाभावसम्बन्धको लिए हुए उदाहरण-सहित बतलाया गया है उसी प्रकार ये शेष भग भी जानने अथवा योजना किये जानेके योग्य है। ( इन भंगोकी व्यवस्था ) **हे मुनीन्द्र** —जीवादितत्त्वोंके याथात्म्यका मनन करनेवाले मुनियोंके स्वामी वीरजिनेन्द्र ! —**आपके शासन** ( मत ) **मे कोई भी विरोध घटित नहीं होता है** —क्योंकि वस्तु अनेकान्तात्मक है ॥ २० ॥

1) **एवं विधिनिषेधाभ्यामनवस्थितमर्थकृत् ।**
**नेति चेन्न यथा कार्यं बहिरन्तरुपाधिभिः ॥ २१ ॥**

§ 21 **सप्तभङ्गीविधौ स्याद्वादे विधिप्रतिषेधाभ्यां समारूढं वस्तु सदसदात्मकमर्थक्रियाकारि, कथंचित्सत एव सामग्रीसंनिपातिनः स्वभावातिशयोपपत्तेः सुवर्णस्येव केयूरादिसंस्थानम् । नेति चेदित्यादिनैकान्तेऽर्थक्रिया प्रतिक्षिपति । न तावत्सतः पुनरुत्पत्तिरस्ति । न चानुत्पन्नस्य स्थितिविपत्ती, खपुष्पवत् । नाप्यसतः सर्वथोत्पत्त्यादयस्तद्वत् । यदि पुन. सामग्र्याः प्रागविद्यमानस्य जन्म [1]स्यात् को दोष. स्यात् । तस्या निरन्वयविनाशे निष्कारणस्य [2]तथोत्पत्तिर्न स्यात् । न हि निराधारोत्पत्तिर्विपत्तिर्वा, क्रियारूपत्वात्, स्थितिवत् । नैतन्मन्तव्यम्—'नोत्पत्त्यादि. क्रिया., क्षणिकस्य तदसंभवात् । ततोऽसिद्धो हेतु' इति, प्रत्यक्षादि[3]विरोधात् । प्रादुर्भावादिमतः चक्षुरादिबुद्धौ प्रतिभासनात् । अन्यथा तद्विशिष्टविकल्पोऽपि माभूत् । न हि दण्डपुरुषसंबन्धादर्शने दण्डीति विकल्प. स्यात् । [4]ततः सूक्तम्—'यदेकान्तेन सदसद्वा तन्नोत्पत्तुमर्हति, व्योमबन्ध्यासुतवत्' इति । कथमिदानीमनुत्पन्नस्य गगनादेः स्थितिः, इति चेत्, न, अनभ्युपगमात् । द्रव्यनयापेक्षया परप्रसिद्ध्या [5]चोदाहरणम् ॥ २१ ॥**

§ 21 अनेकान्तात्मक तत्त्व व्यवस्थाप्यैकान्त निराकर्तुमाह—**एवम्** अनेन प्रकारेण। **विधिनिषेधाभ्याम्** अस्तित्वनास्तित्वाभ्याम् । **अनवस्थितम्** अनवधारित यद्वस्तु **तद् अर्थकृत्** कार्यकारि भवति । **नेति चेत्** यद्येव न भवति । **न । यथाकार्यं** यथाभूत कार्यमुपलभ्यते तस्य कारक न स्यात् । **बहिरन्तरुपाधिभिः** बाह्याभ्यन्तरहेतुभि सहितैरपि । अथवा अनवस्थित शून्य अयथाकार्यम् ॥ २१ ॥

§ 21 **इस प्रकार विधि-निषेध-द्वारा जो वस्तु अवस्थित** ( अवधारित ) **नहीं है** —सर्वथा अस्तित्वरूप या सर्वथा नास्तित्वरूपसे निर्धारित एव परिगृहीत नही है— **वह अर्थ-क्रियाकी करनेवाली होती है । यदि ऐसा नहीं माना जाय तो बाह्य और अन्तरंग कारणोसे कार्यका निष्पन्न होना जो माना गया है वह नहीं बनता** —सर्वथा सत्-रूप या सर्वथा असत्-रूप वस्तु अर्थ-क्रिया करनेमे असमर्थ है, चाहे कितने भी कारण क्यो न मिले, और अर्थ-क्रियाके अभावमे वस्तुत वस्तुत्व बनता ही नही ॥ २१ ॥

---

21) 1. P जन्म न स्यात् । 2. P तथैवोत्प– । 3 P –क्षादि– ।
4. P तस्मात् । 5. P वा उदा– ।

22) **धर्मे धर्मेऽन्य एवार्थो धर्मिणोऽनन्तधर्मणः ।**
**अङ्गित्वेऽन्यतमान्तस्य शेषान्तानां तदङ्गता ॥ २२ ॥**

§ 22 यदि पुन॰ प्रत्युपाधि परमार्थत॰ स्वभावभेदो न स्यात्, तदा दृष्टेऽभिहिते वा प्रमाणान्तरमुक्त्यन्तरं वा निरर्थकं स्यात्, गृहीतग्रहणात्पुनरुक्तेश्च । स्वभावातिशयाभावात् । सदुत्पत्तिकृतकत्वादेः प्रत्यनीकस्वभावविशेषाभावाद् यावन्ति पररूपाणि तावन्त्यस्ततस्ततो व्यावृत्तयः प्रत्येकमित्येषापि कल्पना माभूत् । सता हि स्वभावाना गुणप्रधानभावः स्यात् । ततः परिकल्पितव्यावृत्त्या धर्मान्तरव्यवस्थापनं[1] परिफल्गुप्रायम्, वस्तुस्वभावाभावप्रसङ्गात् । तथेन्द्रियबुद्धयोऽपि स्वलक्षणविषया माभूवन्, केवलं व्यावृत्तिं पश्येयुः, अदृष्टे विकल्पायोगादतिप्रसङ्गाच्च ॥ २२ ॥

§ 22 अथ मत स्यादस्तीत्यनेनैव स्याच्छब्देन सर्वे भङ्गा गृहीता । किमेतेषा प्रपञ्चोऽत्र आह—**धर्मे धर्मे** धर्मनिर्देशे । भङ्गे भङ्गे इति वा पाठान्तरम् । **अन्य एवार्थो**ऽपूर्व एवार्थ । कुत । **धर्मिणो** वस्तुन । अनन्ता धर्मा स्वभावा यस्य सोऽनन्तधर्मा तस्यानन्त**धर्मणः** । **अङ्गित्वे** प्रधानत्वे । **अन्यतमान्तस्य** अस्तित्वादीना मध्ये एकतमस्य । **शेषान्तानां** परिशेषधर्माणा नास्तित्वादीनाम् । तत्तस्मात् अङ्गता अप्रधानता । अथवा **तदङ्गता** इति पाठान्तरम् । तदा तस्मिन्काले । शेषाणामप्रधानता । अत पुनरुक्तता नास्ति । अथवा सुनयसप्तभङ्गीनिरूपणार्थमिय कारिका, सक्षेपार्था चेयम् ॥ २२ ॥

§ 22 **अनन्तधर्मा धर्मीके धर्म-धर्ममे अन्य ही अर्थ संनिहित है**—धर्मीका प्रत्येक धर्म एक जुदे ही प्रयोजनको लिए है । उन **धर्मोंमेसे किसी एक धर्मके अङ्गी** ( प्रधान ) **होनेपर शेष धर्मोंको उसके अथवा उस समय अंगता** ( अप्रधानता ) **हो जाती है** —परिशेष ( बाकीके ) सब धर्म उसके अङ्ग अथवा उस समय अप्रधान रूपसे विवक्षित होते हैं ॥ २२ ॥

23) **एकानेकविकल्पादावुत्तरत्रापि योजयेत् ।**
**प्रक्रियां भङ्गिनीमेनां नयैर्नयविशारद ॥ २३ ॥**

§ 23 स्यादेकं सद्द्रव्यनयापेक्षया । यद्यपि विशेषाः परस्परव्यावृत्तपरिणामाः कालादिभेदेऽपि सद्रूपाविशिष्टाश्चित्रज्ञाने[1]नीलादिनिर्भासवत् । स्यादनेकत्वमास्कन्दन्ति । न हि संख्यासंख्यावतोर्भेदेनादृष्टौ विशेषणविशेष्यविकल्प॰ कुण्डलिवत् क्षीरोदकवदतद्वेदिनि । न च भेदैकान्ते तद्वृत्तास्ति, व्यपदेशनिमित्ताभावात् । अनवस्थाप्रसङ्गाच्च । तस्मादयं कथचिदेव संख्यासंख्यावतोः स्वभावभेदं पश्यति, तद्विशिष्टविकल्पनात् । क्वचिन्निर्णयेऽप्यन्यत्र संशयाद्, वर्णरसादिवत् ॥ २३ ॥

इत्याप्तमीमासाभाष्ये प्रथमः परिच्छेदः ॥

---

22) 1 P –स्थान ।
23) 1 As, P – ज्ञाननील– ।

§ 23 सप्तभङ्गी योजयन्नाह—**नयविशारदो** नय प्रमाणपरिगृहीतार्थैकदेशे वस्त्वध्यवसायस्तस्मिन्कुशल । **नयैः** स्वहेतुभिर्विशेषणत्वादिभि । **एना प्रक्रियाम् । भङ्गिनीं** भङ्गवती भङ्गबहुलाम् । **उत्तरत्रापि** इह ऊर्ध्वमपि । **योजयेद्** उद्घाटयेत् । क एकश्च अनेकश्च तावेव विकल्पौ तावादिर्यस्य तस्मिन् **एकानेकविकल्पादौ** । कथम् । स्यादेक । स्यादनेक । स्यादेकश्चानेकश्च । स्यादवक्तव्य । स्यादेकश्चावक्तव्यश्च । स्यादनेकश्चावक्तव्यश्च । स्यादेकश्चानेकश्चावक्तव्यश्च । एवमनेन द्वैताद्वैतादिषु योज्यम् ॥ २३ ॥

23 **जो नय-निपुण** है वह ( विधि-निषेधमे प्रयुक्त ) **इस भगवती** (सप्तभङ्गवती) **प्रक्रिया को आगे भी एक-अनेक जैसे विकल्पादिकमे नयोके साथ योजित करे** —जैसे सम्पूर्ण वस्तुतत्त्व कथचित् एकरूप है, कथचित् अनेकरूप है, कथचित् एकाऽनेकरूप है, कथचित् अवक्तव्यरूप है, कथचिदेकावक्तव्यरूप है, कथचिदनेकावक्तव्यरूप है और कथचिदेकाऽनेकाऽवक्तव्यरूप है। एकत्वका अनेकत्वके साथ और अनेकत्वका एकत्वके साथ अविनाभावसम्बन्ध है, और इसलिये एकत्वके बिना अनेकत्व और अनेकत्वके बिना एकत्व नही बनता, न वस्तुतत्त्व सर्वथा एकरूपमे या सर्वथा अनेकरूपमे व्यवस्थित ही होता है, दोनोमे वह अनवस्थित है और तव ही अर्थ-क्रियाका कर्ता है, एकत्वादि किसी एकधर्मके प्रधान होनेपर दूसरा धर्म अप्रधान हो जाता है ॥ २३ ॥

**इति देवागमाप्तमीमासाया प्रथमः परिच्छेद ॥**

# द्वितीयपरिच्छेदः

24) **अद्वैतैकान्तपक्षेऽपि दृष्टो भेदो विरुध्यते ।**
**कारकाणां क्रियायाश्च नैकं स्वस्मात्प्रजायते ॥ २४ ॥**

§ 24 **सदाद्येकान्तेषु दोषोद्भावनमभिहितम् । अद्वैतैकान्ताभ्युपगमात् न तावतानेकान्तसिद्धिरिति चेत्, न, प्रत्यक्षादिविरोधात् । न हि कस्यचिदभ्युपगममात्रं प्रमाणसिद्धं क्रियाकारकभेदं प्रतिरुणद्धि, क्षणिकाभ्युपगमवत् । न स्वतो जायते परतो वा, अपि तु जायते एवेति सुषुप्तायते, प्रतिपत्त्युपायाभावात् । तस्मात् यद्दृष्टविरुद्धं तन्न समञ्जसम्, यथा नैरात्म्यम्, विरुद्ध्यते च तथाद्वैतं क्रियाकारकभेदप्रत्यक्षादिभिः ॥ २४ ॥**

§ 24 सदाद्येकान्तेषु दोषमुद्भाव्यैवमद्वैतैकान्त दूषयितुमाह—**अद्वैत**मेवेत्येका**न्तो**ऽसद्ग्रह स एव **पक्षो** जिज्ञासितविशेषो धर्मी तस्मिन्न**पि । दृष्टो भेदः** प्रत्यक्षप्रमाणपरिच्छिन्न नानात्व लोकप्रसिद्ध वा । **विरुध्यते** मिथ्या भवेत् । **कारकाणि** कर्त्रादीनि, **क्रिया** आकुञ्चनादिका पाकादिका वा, **एतेषां** परस्परेण इय क्रिया, इमानि कारकाणि, इद कर्तृकारकम्, इद कर्मेत्यादि । इय दहनक्रिया, इय पचनक्रियेत्यादि । **च**शब्दादिद प्रमाणमिद परिच्छेद्य वस्तु, इति भेदो न स्यात् । कुत , **न** इति एकान्तप्रतिषेधवचनम् । **एकम्** असहायम् । **स्वस्माद्** आत्मन **प्रजायत** उत्पद्यते ॥२४॥

§ 24 **यदि अद्वैत एकान्तका पक्ष लिया जाय** —यह माना जाय कि वस्तुतत्त्व सर्वथा दुई ( द्वितीयता ) से रहित एक ही रूप है— **तो कारको और क्रियाओका जो भेद** ( नानापन ) **प्रत्यक्षप्रमाणसे जाना जाता अथवा स्पष्ट दिखाई देनेवाला लोकप्रसिद्ध** ( सत्य ) **है वह विरोधको प्राप्त होता** ( मिथ्या ठहरता ) है—कर्ता, कर्म, करणादि–रूपसे जो सात कारक अपने असख्य तथा अनन्त भेदोको लिये हुए हैं उनका वह भेद-प्रभेद नही बनता और न क्रियाओका चलना-ठहरना, उपजना-विनशना, पचाना-जलाना, सकोडना-पसारना, खाना-पीना और देखना-जानना आदि रूप कोई विकल्प ही बनता है, फलत सारा लोक-व्यवहार बिगड जाता है । ( यदि यह कहा जाय कि जो एक है वही विभिन्न कारको तथा क्रियाओके रूपमे परिणत होता है तो यह कहना ठीक नही है, क्योकि ) **जो कोई एक है**—सर्वथा अकेला एव असहाय है—**वह अपनेसे ही उत्पन्न नहीं होता ।** उसका उस रूपमे जनक और जन्मका कारणादिक दूसरा ही होता है, दूसरेके अस्तित्व एव निमित्तके विना वह स्वय विभिन्न कारको तथा क्रियाओके रूपमे परिणत नही हो सकता ॥ २४ ॥

25) **कर्मद्वैतं फलद्वैतं लोकद्वैतं च नो भवेत् ।**
**विद्याविद्याद्वयं न स्यात् बन्धमोक्षद्वयं तथा ॥ २५ ॥**

§ 25. **प्रमाणप्रत्यनीकं स्वमनोषिकाभिरद्वैतमन्यद्वा किंचित्फलमुद्दिश्यारचयेत् । अन्यथा तत्प्रतिपत्तिप्रवर्तनायोगात्प्रेक्षावृत्तेः । तथाहि—पुण्यपापसुखदुःखेहपरलोकविद्येतरबन्धमोक्षविशेषरहितं प्रेक्षापूर्वकारिभिरनाश्रयणीयम्[1], यथा नैरात्म्यदर्शनम्, तथा च प्रस्तुतम् ॥ २५ ॥**

25) 1 P –रनादरणीयम् ।

§ 25 तथैवमपि—शुभकर्माशुभकर्मेति द्वय न स्यात् । पुण्यमिद पापमिदम्, इहलोक परलोक , ज्ञानमज्ञानम्, बन्धो मोक्षश्च जीवप्रदेशकर्मप्रदेशान्योन्याश्लेषो बन्धः । अष्टविधकर्ममोक्षो मोक्ष , इत्येवमादि न स्यात् ॥ २५ ॥

§ 25 ( सर्वथा अद्वैत सिद्धान्तके माननेपर ) **कर्म-द्वैत**—शुभ अशुभ कर्मका जोडा, **फल-द्वैत**—पुण्य-पापरूप अच्छे-बुरे फलका जोडा **और लोक-द्वैत**—फल भोगनेके स्थानरूप इहलोक-परलोकका जोडा—**नहीं बनता** । ( इसी तरह ) **विद्या अविद्याका द्वैत** ( जोडा ) **तथा बन्ध-मोक्षका द्वैत** ( जोडा ) **भी नहीं बनता** । इन द्वैतो ( जोडो ) मेसे किसी भी द्वैतके माननेपर सर्वथा अद्वैतका एकान्त बाधित होता है । और यदि प्रत्येक जोडेकी किसी एक वस्तुका लोपकर दूसरी वस्तुका ही ग्रहण किया जाय तो उस दूसरी वस्तुके भी लोपका प्रसग आता है, क्योंकि एकके बिना दूसरीका अस्तित्व नही बनता, और इस तरह भी सारे व्यवहारका लोप ठहरता है ॥ २५ ॥

26) **हेतोरद्वैतसिद्धिश्चेद्द्वैतं स्याद्धेतुसाध्ययोः ।**
**हेतुना चेद्विना सिद्धिर्द्वैतं वाङ्मात्रतो न किम् ॥ २६ ॥**

§ 26 **यदसिद्धं तन्न हितेप्सुभिरहितजिहासुभिर्वा प्रतिपत्तव्यम्, यथा शून्यैकान्तः । तथा चासिद्धमद्वैतम्, इत्यत्र नासिद्धो हेतुः । तत्सिद्धिर्यदि साधनात् साध्यसाधनयोस्तर्हि द्वैत स्यात् । अन्यथाद्वैतसिद्धिवत् द्वैतसिद्धिः कथं न स्यात् । स्वाभिलापमात्रादर्थसिद्धौ सर्वं सर्वस्य सिद्धयेत् ॥ २६ ॥**

§ 26 प्रमाणादद्वैत निराकर्तुमाह—अद्वैतस्य सिद्धि किं हेतोराहोस्विद्वचनमात्रात् । यदि हेतो , इद साधनमिद साध्यमिति द्वैत स्यात् । साधनमन्तरेणाद्वैतस्य सिद्धिश्चेदेव वचनमात्राद् द्वैत कस्मान्न स्यादिति समानम् ॥ २६ ॥

§ 26. ( इसके सिवाय यह प्रश्न पैदा होता है कि अद्वैतकी सिद्धि किसी हेतुसे की जाती है या बिना किसी हेतुके वचनमात्रसे ही ?—उत्तरमे ) **यदि यह कहा जाय कि अद्वैतकी सिद्धि हेतुसे की जाती है तो हेतु** ( साधन ) **और साध्य दोकी मान्यता होनेसे द्वैतापत्ति खड़ी होती है**—सर्वथा अद्वैतका एकान्त नही रहता—**और यदि बिना किसी हेतुके ही सिद्धि कही जाती है तो क्या वचनमात्रसे द्वैतापत्ति नहीं होती ?**—साध्य अद्वैत और वचन, जिसके द्वारा साध्यकी सिद्धिको घोषित किया जाता है, दोनोके अस्तित्वसे अद्वैतता नही रहती । और यह बात तो बनती ही नही कि जिसका स्वय अस्तित्व न हो उसके द्वारा किसी दूसरेके अस्तित्वको सिद्ध किया जाय अथवा उसकी सिद्धिकी घोषणा की जाय । अत अद्वैत एकान्तकी किसी तरह भी सिद्धि नही बनती, वह कल्पनामात्र ही रह जाता है ॥ २६ ॥

27) **अद्वैतं न विना द्वैतादहेतुरिव हेतुना ।**
**संज्ञिनः प्रतिषेधो न प्रतिषेध्यादृते क्वचित् ॥ २७ ॥**

§ 27 **अद्वैतशब्द स्वाभिधेयप्रत्यनीकपरमार्थापेक्षो नञ्पूर्वाखण्डपदत्वात्, अहेत्वभिधानवत् । नात्र किंचिदतिप्रसज्यते, तादृशो नञो वस्तुप्रतिषेधनिबन्धनत्वात् । सर्वत्र प्रतिषेध्यादृते संज्ञिनः प्रतिषेधाभावः प्रत्येतव्यः ॥ २७ ॥**

§ 27. पुनरप्यद्वैत निराकर्तुमाह—द्वैताद्विना न भवत्यद्वैतम्। यथा अहेतुर्हेतुमन्तरेण न भवति। सञ्ज्ञिनो नामवत प्रतिषेध्यमन्तरेण प्रतिषेधो यस्मात् क्वचिदपि न भवति। यो य सञ्ज्ञी तस्य तस्य प्रतिषेध्यमन्तरेण प्रतिषेधो न भवति। यथा कुसुममन्तरेण आकाशादौ कुसुमस्य। सञ्ज्ञि चाद्वैत तस्मात्तस्य द्वैतेन विना प्रतिषेधो न भवति ॥ २७ ॥

§ 27 (एक बात और भी बतला देनेकी है, और वह यह कि) **द्वैतके बिना अद्वैत उसी प्रकार नहीं होता जिस प्रकार कि हेतुके बिना अहेतु नहीं होता; क्योंकि कहीं भी संज्ञीका**—नामवालेका—**प्रतिषेध प्रतिषेध्यके बिना—जिसका निषेध किया जाय उसके अस्तित्व-बिना—नहीं बनता।** द्वैतशब्द एक सञ्ज्ञी है और इसलिये उसके निषेधरूप जो अद्वैतशब्द है वह द्वैतके अस्तित्वकी मान्यता-बिना नही बनता। इस प्रकार अद्वैत एकान्तका पक्ष लेनेवाले ब्रह्माद्वैत, सवेदनाद्वैत और शब्दाद्वैत जैसे मत सदोष एव बाधित ठहरते है ॥ २७ ॥

28) **पृथक्त्वैकान्तपक्षेऽपि पृथक्त्वादपृथक्तु तौ[1] ।**
**पृथक्त्वे न पृथक्त्वं स्यादनेकस्थो ह्यसौ गुणः ॥ २८ ॥**

§ 28 **इष्टमद्वैतैकान्तापवारणम्, पृथक्त्वैकान्ताङ्गीकरणात्, इति मावदीघरत्, पृथग्भूत-पदार्थेभ्यः पृथक्त्वस्य पृथग्भावे तेषामपृथक्त्वप्रसङ्गात्। तद्गुणगुणिनोरतादात्म्ये घटपटवद् व्यपदेशोऽपि माभूत्, सबन्धनिबन्धान्तराभावात्। पृथक्त्वमन्यद्वा पृथग्भूतमनशमनेकस्थेषु निष्पर्यायं वर्तते, इति दुरवगाहम् ॥ २८ ॥**

§ 28 अधुना सर्वथा सर्वपदार्थपृथक्त्वैकान्तवादिवैशेषिकादिमतकदर्थनार्थमाह—यद्यप्यद्वैतैकान्तपक्षे दोपभयात् पृथक्त्वमित्येकान्तपक्षोऽभ्युपगम्यते तथापि पृथग्गुणात्तावपृथग्भूतावभ्युपगन्तव्यौ गुणगुण्यादी। अन्यथा तस्मादपि यदि तौ पृथक् भिन्नौ स्यातां तदानी पृथक्त्वाख्यो गुणो न स्यात्। कुत। यतोऽनेकस्थो ह्यसौ गुणो दृष्ट इत्यर्थ। न च तयो पृथक्त्वगुण. पृथग्गति सर्वेषामभाव स्यात्। तस्मात् भेदपक्षोऽपि न श्रेयान् ॥ २८ ॥

§ 28 (अद्वैत एकान्तमे दोष देखकर) **यदि पृथक्पनका एकान्तपक्ष लिया जाय**—यह माना जाय कि वस्तुतत्त्व एक दूसरेसे सर्वथा भिन्न है—**तो इसमे भी दोष आता है और यह प्रश्न पैदा होता है कि पृथक्त्व-गुणसे द्रव्य और गुण पृथक् हैं या अपृथक्? यदि अपृथक् हैं तब तो पृथक्त्वका एकान्त ही न रहा**—वह बाधित हो गया। **और यदि पृथक् हैं तो पृथक्त्व नामका कोई गुण ही नहीं बनता** (जिसे वैशेषिकोने गुणोकी २४ सख्यामे अलगसे गिनाया है) **क्योंकि वह एक होते हुए भी अनेकोमे स्थित माना गया है और इससे उसकी कोई पृथग्गति नहीं है**—पृथक् रूपमे उसकी स्थिति न तो दृष्ट है और न स्वीकृत है। अत पृथक् कहनेपर उसका अभाव ही कहना होगा। यह कारिका वैशेषिको तथा नैयायिकोके पृथक्त्वैकान्त पक्षको लक्ष्य करके कही गयी है, जो क्रमश ६ तथा १६ पदार्थ मानते है और उन्हे सर्वथा एक दूसरेसे पृथक् बतलाते है। अगली कारिकामे क्षणिकैकान्तवादी पृथक्त्वैकान्तपक्षको सदोष बतलाया जाता है ॥ २८ ॥

---

28) 1. P पृथक्कृतौ।

29) **सन्तानः समुदायश्च साधर्म्यं च निरंकुशः ।**
**प्रेत्यभावश्च तत्सर्वं न स्यादेकत्वनिह्नवे ॥ २९ ॥**

§ 29. **कार्यकारणयोः पृथक्त्वैकान्ते कार्यकालमात्मानमनयतः कारणत्वासंभवात्तदनुत्पत्तेः कुतः संततिः । पूर्वापरकालभाविनोरपि हेतुफलव्यपदेशभाजोरतिशयात्मनोरन्वयः सन्तानः । क्वचित्क्षणान्तरे नीललोहितादिनिर्भासचित्रैकसंवेदनवत् कथंचिदेकत्वमेव भवितुमर्हति । तदवयवपृथक्त्वकल्पनायां चित्रनिर्भासो माभूत् । पृथग्वर्णान्तरविषयानेकसन्तानैकक्षणवत् । तत्र प्रत्यासत्तिविशेषः कथंचिदैक्यात् कोऽपरः स्यात् । अन्यथा वेद्यवेदकाकारयोरपि पृथक्त्वैकान्तप्रसङ्गात् । स्वभावभेदेऽपि सहोपलम्भनियमात्कथंचिदभेदाभ्युपगमे कथमेकसन्तानसंविदा समनन्तरोपलम्भनियमात्कथंचिदैक्यं न स्यात् । तत्र यया[1] प्रत्यासत्त्या सन्तानः समुदायश्च तयैव[2] कथंचिदैक्यमस्तु । न हि तादृशा साधर्म्यमन्यदन्यत्रात्मसाकर्यात् । एकज्ञाननिर्भासविशेषाणां मिथः स्वभावभेदेऽपि यथैकत्वपरिणामः स्वभावतोऽनङ्कुश , तथा प्रेत्यभावादिषु सन्तानान्वयः परमार्थैकत्वमात्मसत्त्वजीवादिव्यपदेशभाजनं स्वभावभेदानाक्रम्य स्वामिवदनन्यत्र वर्तयति ॥ २९ ॥**

§ 29 इदानी पृथक्त्वैकान्तवादिविशेषमायासु क्षणिकत्वैकान्तकदर्थनार्थमाह—एकत्वस्य सादृश्यस्य कथञ्चित्तादात्म्यस्य । निह्नवोऽपह्नुतिर्निराकरणम् । अथवा एकशब्दो द्रव्यवचनोऽय तत स्वार्थिकस्वप्रत्यय तस्मिन् **एकत्वनिह्नवे** । क्रमभाविना कारणतद्वतामालीनकमन्दकमधुरकादीना गोरसजातिमजहतामुत्तरोत्तरपरिणामप्रवाह **संतानो** न स्यान्न भवेत् । तथा रूपरसादीना धर्माणा सहभुवा नियमतो युगपदुत्पादव्ययभाजामेकस्मिन्नवस्थान **समुदायो** न स्यात्, यद्यनेकान्तात्मकमेकद्रव्य न स्यात् । तथा शब्दघटादीना **साधर्म्यं** च न स्यात् । मृत्वामुत्र प्राणिन प्रादुर्भाव **प्रेत्यभाव** सोऽपि न स्यात् । **निरंकुशो** निर्बाधोऽस्खलितरूप सर्वत्र सबन्धनीय । **च**-शब्देन प्रत्यभिज्ञानादयोऽपि न स्यु । **तदेतत्सर्वं न स्यादिति** समुदायेन निर्देशात् यथायोग्यं सबन्धो भवति । सामान्यनिर्देशान्नपुसकलिङ्गता ॥ २९ ॥

§ 29. **'यदि-एकत्वका सर्वथा लोप किया जाय**—सामान्य, सादृश्य, तादात्म्य अथवा सभी पर्यायोमे रहनेवाले द्रव्यत्वको न माना जाय—**तो जो संतान, समुदाय और साधर्म्य तथा प्रेत्यभाव** ( मरकर परलोकगमन ) **निरंकुश है**—निर्बाध रूपसे माना जाता है—**वह सब नहीं बनता**—अर्थात् क्रमभावी पर्यायोमे जो उत्तरोत्तर परिणाम-प्रवाहरूप अन्वय है वह घटित नही होता, रूप-रसादि जैसे सहभावी धर्मोमे जो युगपत् उत्पाद-व्ययको लिये हुए एकत्र अवस्थानरूप समुदाय है वह भी नही बनता, सहधर्मियोमे समान परिणामकी जो एकता है वह भी नही बनती और न मरकर परलोकमे जाना अथवा एक ही जीवका दूसरा भव या शरीर धारण करना ही बनता है । इसी तरह बाल-युवा-वृद्धादि अवस्थाओमे एक ही जीवका रहना नही बनता और ( चकारसे ) प्रत्यभिज्ञान-जैसे सादृश्य तथा एकत्वके जोडरूप ज्ञान भी नही बनते ॥ २९ ॥

---

29) 1. P यथा । 2 P तयैव ।

30) **सदात्मना च भिन्नं चेत् ज्ञानं ज्ञेयाद् द्विधाप्यसत् ।**
**ज्ञानाभावे कथं ज्ञेयं बहिरन्तश्च ते द्विषाम् ॥ ३० ॥**

§ 30 **विषयिणो विषयात्कथंचित्स्वभावभेदेऽपि सदाद्यात्मना तादात्म्यं बोधाकारस्येव विषयाकारात्, विशेषाभावात् । अन्यथा ज्ञानमवस्त्वेव, खपुष्पवत् । तदभावे बहिरन्तर्वा ज्ञेयमेव न स्यात्, तदपेक्षत्वात् ॥ ३० ॥**

§ 30. पुनरपि भेदैकान्ते दूषणमाह—तथा चैतन्यस्वरूपेण **ज्ञेयात्**प्रमेयात् **ज्ञानम**वबोधो **भिन्नम्** अन्यत्, **चेद्** यदि **सदात्मना च** अस्तित्वरूपेणापि पृथक् स्यात् । **द्वेधापि** ज्ञान ज्ञेय **चासत्** स्यात् । अभाव. स्यात् । कुत । **ज्ञानाभावे** बोधशून्ये **कथं ज्ञेयम्** । **बहि**र्बाह्यम् । **अन्तः** अन्तरङ्ग **च** । **ते द्विषा** तुभ्य द्विषिता मिथ्यादृशाम् । यस्माज्ज्ञाने सति ज्ञेय विषयत्वात्, ज्ञेये सति ज्ञान च भवति, तत्परिच्छेदकत्वात् । तस्मात् ज्ञान कथचिदभिन्नमेषितव्य सदाद्यात्मनान्यथावस्तु स्यात् ॥ ३० ॥

§ 30 (इसी तरह) **ज्ञानको** (जो कि अपने चैतन्यरूपसे ज्ञेय-प्रमेयसे पृथक् है) **यदि सत्स्वरूपसे भी ज्ञेयसे पृथक् माना जाय** - अस्तित्वहीन स्वीकार किया जाय—**तो ज्ञान और ज्ञेय दोनोका ही अभाव ठहरता है**—ज्ञानका अभाव तो उसके अस्तित्व-विहीन होनेसे हो गया और ज्ञेयका अभाव ज्ञानाभावके कारण बन गया, क्योकि ज्ञानका जो विपय हो उसे ही ज्ञेय कहते है—**ज्ञानके अभावमे बाह्य तथा अंतरंग किसी भी ज्ञेयका अस्तित्व** ( हे वीर जिन ! ) **आपसे द्वेष रखनेवालोके यहाँ**—सर्वथा पृथक्त्वैकान्तवादी वैशेषिकादिकोंके मतमे—**कैसे बन सकता है ?**—उनके मतसे उसकी कोई भी समीचीन व्यवस्था नही बन सकती ॥ ३० ॥

31) **सामान्यार्था गिरोऽन्येषां विशेषो नाभिलप्यते ।**
**सामान्याभावतस्तेषां मृषैव सकला गिरः ॥ ३१ ॥**

§ 31 **विशेषाणामशक्यसमयत्वात् असकेतितानभिधानात्, विशेषदर्शनवत्तद्बुद्धावप्रतिभासनादर्थसंनिधानानपेक्षणाच्च । स्वलक्षणमनभिधेय सामान्यमवस्तु उच्यत इति वस्तु नोच्यत इति स्यात् । ततः किं शब्दोच्चारणेन सकेतेन वा, गोशब्दोऽपि हि गा नाभिधत्ते यथाश्वशब्दः । तथा च वस्तुनोऽनभिधाने मौनं यत्किंचिद्वा वचनमाचरेत्, विशेषाभावात् । अथास्ति विशेषः, कथं स्वार्थं नाभिदधीत । न वै परमार्थैकतानत्वादभिधाननियम., किन्तूपादानविशेषात्, इत्यपि वार्तम्, अविकल्पेऽपि तथैव प्रसङ्गात् । तदेवमनवधारितात्मक वस्तुस्वलक्षणमापनीपद्येत । नाश्यमिन्द्रियज्ञानमर्थसनिधानमपेक्षते, विप्लवाभावप्रसङ्गात् । नापि विशदात्मकमेव, दूरेऽपि तथा प्रतिभासप्रसङ्गात्, यथारात् । क्षणभङ्गादिसाधनवचनमन्यद्वा न किंचित्सत्यं स्यात् [1]वक्तुरभिप्रेतमात्रसूचित्वात्[2], प्रधानेश्वरादिसाधनवाक्यवत् । सदर्थाप्रतिपादनाद्वा न क्षणभङ्गादिसाधनवचनं विपक्षदूषणवचनं वा सत्यम्, प्रसिद्धालीकवचनवत् । दृश्यविकल्प्यार्थाकारयोः कथंचिदप्यतादात्म्ये स्वलक्षणं सर्वथानवधारितलक्षण दानादिचेतोधर्मादिक्षणवत् कथ सशीतिमतिवर्तेत । विकल्पानां चावस्तुविषयत्वात् । सोयमविकल्पेतरराश्योरर्थेतरविषयत्वमन्यद्वा**

31) 1. As वक्त्र । 2. P. सूचितत्वात् ।

स्वांशमात्रावलम्बिना विकल्पान्तरेण प्रत्येतीति सुपरिबोधप्रज्ञो देवानांप्रियः। स्वत एव विकल्पसंविदा निर्णये स्वलक्षणविषयोऽपि विकल्पः स्यात्। परतश्चेत्, अनवस्थानादप्रतिपत्तिः। अतोऽर्थविकल्पोऽपि माभूदित्यन्धकल्पं जगत् स्यात्। न चायं परोक्षबुद्धिवादमतिशेते। स्वयमनिर्णीतेन नामात्मना बुद्धिरर्थं व्यवस्थापयतीति सुव्यवस्थितं तत्त्वम्। न वै स्वरूपं पररूपं वा बुद्धिरध्यवस्यति, निर्विषयत्वाद् भ्रान्तेः[3]। इदमतो भ्रान्ततरं बहिरन्तश्च सद्भावासिद्धेः। स्वपरस्वभावप्रतिपत्तिशून्येन स्वपरपक्षसाधनदूषणव्यवस्था प्रत्येतीति किमपि महाद्भुतम् ॥ ३१ ॥

§ 31 सार्थविशेषस्य वाच्यवाचकतेष्यते तस्य पूर्वमदृष्टत्वात्सामान्यं त्वपदिश्यते शब्दैरित्यभिप्रायवतो मतमाश्रित्य तत्कदर्थयितुमाह—अथ मतं सामान्यमस्माभिरिष्यते किन्तु शब्दगोचरत्वादवस्तु, अत आह—सामान्यं विकल्पेनेष्टोऽर्थो वाच्यो यासां ताः सामान्यार्थाः। गिरो वाचः, अन्येषां मिथ्यादृशाम्। यतस्ताभिर्विशेषो याथात्म्यं स्वलक्षणं नाभिलप्यते। यद्येवं सामान्यं तेषामवस्तु अतस्तस्याभावात्सकलाः समस्ता गिरो वचनानि मृषैवासत्यरूपा एव अतो न वाच्यं नापि वाचकोऽनुमानाभावः ॥ ३१ ॥

§ 31 दूसरोके यहाँ—बौद्धोके मतमे—वचन सामान्यार्थक हैं; क्योंकि उनके द्वारा (उनकी मान्यतानुसार) विशेषका—याथात्म्यरूप स्वलक्षणका—कथन नहीं बनता है। (वचनोंके मात्र सामान्यार्थक होनेसे वे कोई वस्तु नही रहते—बौद्धोंके यहाँ उन्हे वस्तु माना भी नही गया—और विशेषके अभावमे सामान्यका भी कही कोई अस्तित्व नही बनता, ऐसी हालतमे सामान्यके भी अभावका प्रसग उपस्थित होता है) सामान्यका अवस्तुरूप अभाव होनेसे उन (बौद्धो) के सम्पूर्ण वचन मिथ्या ही ठहरते हैं—वे वचन भी सत्य नही रहते, जिन्हे वे सत्यरूपसे प्रतिपादन करते हे ॥ ३१ ॥

32) **विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम्।**
**अवाच्यतैकान्तेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ ३२ ॥**

§ 32 अस्तित्वनास्तित्वैकत्वानेकत्ववत् पृथक्त्वेतरपरस्परप्रत्यनीकस्वभावद्वयसंभवोऽपि माभूत्, विप्रतिषेधात्। न खलु सर्वात्मना विरुद्धधर्माध्यासोऽस्ति, तदन्योन्यविधिप्रतिषेधलक्षणत्वात्, बन्ध्यासुतवत्। सर्वथानभिलाप्यतत्त्वाभ्युपगमेऽपि यदेतदनभिलाप्यं तत्त्वमिति, तद्व्याहन्यते, पूर्ववत् ॥ ३२ ॥

§ 32 उभयैकान्तं निराकर्तुकाम प्राह—अथ मतं यद्येकैके दोष उभयैकात्म्यमेषितव्यमिति दूषणमाह। एकत्वपृथक्त्वपरप्रत्यनीकस्वभावद्वयसभवोऽपि न सभवति, अस्तित्वनास्तित्ववत्, प्रतिषेधात्। एकेनैकस्य निराकृतत्वात्। अथावाच्यमिष्यते, तदपि न। अवाच्यत्वे येयमुक्तिः सापि न सभवति मिथ्यादृशाम् ॥ ३२ ॥

§ 32 (अद्वैत और पृथक्त्व दोनो एकान्तोकी अलग-अलग मान्यतामे दोष देखकर) यदि अद्वैत (एकत्व) और पृथक्त्व दोनोका ऐकात्म्य (एकान्त) माना जाय तो स्याद्वाद न्यायके विद्वेषियोके यहाँ—उन लोगोके मतमे जो अद्वैत, पृथक्त्वादि सप्रतिपक्ष धर्मोंमे पारस्परिक अपेक्षाको न मानकर उन्हे स्वतत्र धर्मोंमे स्वीकार करते हैं और इस तरह स्याद्वाद-न्यायके शत्रु बने हुए हैं—वह ऐकात्म्य नहीं बनता (उसी प्रकार जिस प्रकार कि अस्तित्व-नास्तित्वका

3. P —त्वादिभ्रान्ते।

ऐकात्म्य नही बनता ), **क्योंकि उससे** ( वन्ध्या-पुत्रकी तरह ) **विरोध दोष आता है**—अद्वैतैकात पृथक्त्वैकातका और पृथक्त्वैकात अद्वैतैकातका सर्वथा विरोधी होनेसे दोनोमे ऐकात्मता घटित नही हो सकती । (अद्वैत, पृथक्त्व और उभय तीनो एकान्तोकी मान्यतामे दोष देखकर) **यदि अवाच्यता** ( अवक्तव्यता ) **एकान्तको माना जाय**—यह कहा जाय कि वस्तुतत्त्व एकत्व या पृथक्त्वके रूपमे सर्वथा अवाच्य ( अनिर्वचनीय या अवक्तव्य ) है—**तो वस्तुतत्त्व 'अवाच्य है' ऐसा कहना भी नहीं बनता**—इस कहनेसे ही वह 'वाच्य' हो जाता है, अवाच्य नही रहता, क्योकि सर्वथा 'अवाच्य' की मान्यतामे कोई वचन व्यवहार घटित ही नही हो सकता ॥ ३२ ॥

33) **अनपेक्षे पृथक्त्वैक्ये ह्यवस्तु द्वयहेतुतः ।**
**तदेवैक्य पृथक्त्वं च स्वभेदैः साधनं यथा ॥ ३३ ॥**

§ 33 **एकत्वपृथक्त्वे नैकान्ततः[1] स्तः, प्रत्यक्षादिविरोधात्, इति स्पष्टयति—पृथक्त्वैकत्वे तथाभूते न स्ताम्, एकत्वपृथक्त्वरहितत्वाद्, व्योमकुसुमादिवत् । सापेक्षत्वे हि तदेवैक्य पृथक्त्व मित्यविरुद्धं सपक्षविपक्षयोर्भावाभावाभ्या साधनवत् । स्वभेदैर्वा संवेदनवत् । [2]स्वारम्भकावयवैर्वा घटादिवत् । तादृशं हि साधनं स्वार्थक्रियायाः तदन्तरेणापि पाठान्तरमिदं बहुसंगृहीतं भवति ॥ ३३ ॥**

§ 33 सामान्यविशेषौ परस्परानपेक्षावन्याभ्युपगतौ निरस्य तौ सापेक्षौ सन्तावर्थक्रिया कुरुत इत्यस्यार्थस्य प्रतिपादनार्थमाह—परस्परानपेक्षे पृथक्त्वैक्ये सामान्यविशेषाववस्तु अर्थक्रियाकारि न भवति द्वयहेतोर्द्वाभ्याम् । कथम् । सामान्य नास्ति विशेषशून्यत्वात्, यद्यद्विशेषशून्य तत्तन्नास्ति, यथा खरविषाण, सामान्य च तथा परपरिकल्पितम् । तथा नास्ति विशेष सामान्यशून्यत्वात्, खरविषाणविशेषवत् । इत्यनेन हेतुद्वयेन सामान्यविशेषयोरवस्तुत्व साधनीयम् । **तदेव** वस्तु **ऐक्य** सामान्य विशेषश्च **पृथक्त्व च** द्वयात्मकम् । कुत , अविरोधात् । **यथा साधन** हेतुर्ज्ञान वाक्य वा **स्वभेदैः** स्वधर्मै पक्षधर्मान्वयव्यतिरेकादिभिर्भिन्नमेक भवति ॥ ३३ ॥

§ 33 **एक दूसरेकी अपेक्षा न रखनेवाले पृथक्त्व और एकत्व चूँकि हेतुद्वयसे अवस्तु है**—एकत्व-निरपेक्ष होनेसे पृथक्त्वका और पृथक्त्व-निरपेक्ष होनेसे एकत्वका कही कोई अस्तित्व नही बनता—**अतः एकत्व और पृथक्त्व सापेक्षरूपमे विरोधको प्राप्त न होनेसे उसी प्रकार वस्तुत्वको प्राप्त है जिस प्रकार कि साधन** ( हेतु )—साधन **अपने** पक्षधर्मत्व, सपक्षमे सत्त्व और विपक्षसे व्यावृत्तिरूप भेदो तथा अन्वय-व्यतिरेकरूप **भेदोके साथ** सापेक्षताके कारण विरोधको न रखते हुए **वस्तुत्वको प्राप्त** है ॥ ३३ ॥

34) **सत्सामान्यात्तु सर्वैक्यं पृथग् द्रव्यादिभेदतः ।**
**भेदाभेदविवक्षायामसाधारणहेतुवत् ॥ ३४ ॥**

§ 34 **सर्वार्थाना समानपरिणामेऽपि कथमैक्यं भेदानां स्वभावसाङ्कर्यानुपपत्तेः । यथैकभेदस्य स्वभावविच्छेदाभावात् । अन्यथैकं सदन्यदसत्स्यात् । तत्समञ्जसं सर्वमेकं सदविशेषात् इति । तस्यैव सतो द्रव्यादिभेदात् पृथक्त्वम् । उदाहरणं पूर्ववत् ॥ ३४ ॥**

---

33) 1. A,B –नेकान्तः । 2. P सारंभ ।

§ 34 ननु तदेवैक्य पृथक्त्व च कथम्, यावता विरुद्धमेतत्—सतोऽस्तित्वस्य सामान्य यत्तत्तथा तस्मात् सर्वस्यैक्यमेव । द्रव्यादिभेदैर्द्रव्यपर्यायगुणादिभेदैरथवा द्रव्यक्षेत्रकालभावैर्भिन्न पृथक्त्वमेव । भेदश्चाभेदश्च तयोर्विवक्षाया क्रियमाणायामसाधारणहेतु श्रावणत्वप्राणादिमत्त्वादिस्तद्वत् । यद्यप्यत्रान्वयो नास्ति तथाप्यन्यथानुपपत्तिबलेन सिद्धमिति ॥ ३४ ॥

§ 34 ( यदि यह कहा जाय कि एकत्वके प्रत्यक्ष-बाधित होनेके कारण और पृथक्त्वके सदाद्यात्मकतासे बाधित होनेके कारण प्रतीतिका निर्विषयपना है तब सब पदार्थोंमे एकत्व और पृथक्त्वको कैसे अनुभूत किया जा सकता है ? तो यह कहना ठीक नही है, क्योकि ) **सत्ता - अस्तित्वमे समानता होनेकी दृष्टिसे तो सब** ( जीवादि पदार्थ ) **एक हैं**—इसलिये एकत्वकी प्रतीतिका विषय सत्सामान्य होनेसे वह निर्विषय नही है—**और द्रव्यादिके भेदकी दृष्टिसे**—द्रव्य, गुण और कर्मकी अथवा द्रव्य, क्षेत्र, काल और भावकी जुदी-जुदी अपेक्षाको लेकर—**सब** ( जीवादि पदार्थ ) **पृथक् हैं**—इसलिये पृथक्त्वकी प्रतीतिका विषय द्रव्यादि-भेद होनेसे वह निर्विषय नही है। **जिस प्रकार असाधारण हेतु अभेदकी दृष्टिसे एकरूप और भेदकी दृष्टिसे अनेकरूप है उसी प्रकार सब पदार्थोंमे भेदकी विवक्षासे पृथक्त्व और अभेदकी विवक्षासे एकत्व सुघटित है ॥ ३४ ॥**

35) **विवक्षा चाविवक्षा च विशेष्येऽनन्तधर्मिणि ।**
**सतो विशेषणस्यात्र नासतस्तैस्तदर्थिभिः ॥ ३५ ॥**

§ 35. **विधिप्रतिषेधधर्माणा सतामेव विवक्षेतराभ्या योगस्तदर्थिभिः क्रियेत, अन्यथार्थनिष्पत्तेरभावादुपचारमात्र तु स्यात् । न चाग्निर्माणवक इत्युपचारात्पाकादावुपयुज्यते । तदेकैकशः परस्परव्यावृत्तयोऽपि परिणामविशेषा. ॥ ३५ ॥**

§ 35 केषाचिद्विद्यमानस्याविवक्षाविद्यमानस्यैव विवक्षा, अन्येषा वैयाकरणाना विद्यमानस्यैव विवक्षा नाविद्यमानस्य, अन्येषा विवक्षा नास्तीत्येतन्मतनिराकरणायाह—सतो विद्यमानस्य विशेषणस्यास्तित्वादेर्विवक्षा चाविवक्षा च । नासतो नाविद्यमानस्य क्रियते । कैस्तदर्थिभिर्विवक्षाप्रयोजनवद्भि । अत्रैकस्मिन् । कुत , लोकप्रसिद्धमेतत् ॥ ३५ ॥

§ 35 ( यदि यह कहा जाय कि विवक्षा और अविवक्षाका विषय तो असत्रूप है तब उनके आधारपर तत्त्वकी व्यवस्था कैसे युक्त हो सकती है, तो ऐसा कहना ठीक नही है, क्योकि) **अनन्तधर्मा विशेष्यमे विवक्षा तथा अविवक्षा जो की जाती है वह सत् विशेषणकी ही की जाती है असत्की नहीं और यह उनके द्वारा की जाती है जो उस विशेषणके अर्थी या अनर्थी हैं**—अर्थी विवक्षा करता है और अनर्थी अविवक्षा । जो सर्वथा असत् है उसके विषयमे किसीका अर्थीपना या अनर्थीपना बनता ही नही—वह तो सकल-अर्थ-क्रियासे शून्य होनेके कारण गधेके सीगके समान अवस्तु होता है ॥ ३५ ॥

36) **प्रमाणगोचरौ सन्तौ भेदाभेदौ न संवृती ।**
**तावेकत्राविरुद्धौ ते गुणमुख्यविवक्षया ॥ ३६ ॥**

§ 36 **प्रमाणमविसंवादिज्ञानमनधिगतार्थाधिगमलक्षणत्वात् । तदेवं सति भेदमभेदं वा नान्योऽन्यरहितं विषयीकरोति । न हि बहिरन्तर्वा स्वलक्षणं सामान्यलक्षण वा तथैवोप-**

**लभामहे यथैकान्तवादिभिराम्नायते । सूक्ष्मस्थूलाकाराणां स्थूलसूक्ष्मस्वभावव्यतिरेकेण प्रत्यक्षादावप्रतिभासनात्, तत्र स्वभावान्तरस्य प्राधान्यविवक्षायामाकारान्तरस्य गुणभावः स्यात् । घटोऽयं परमाणवो रूपादयो वेति ॥ ३६ ॥**

इत्याप्तमीमांसाभाष्ये द्वितीयः परिच्छेदः ॥

§ 36 कस्यचिद्भेद संवृतिकल्पितोऽन्यस्याभेद. संवृतिकल्पित इत्येता दुरागमवासनाजनिता विप्रतिपत्ति निराकर्तुमाह—**भेदाभेदौ प्रमाणगोचरौ** प्रमाणविषयौ **सन्तौ** भवन्तौ **संवृति**-रूपावपरमार्थौ, **न**, प्रमाणविषयत्वात् । अतस्तवागमे **तावेकत्रैकस्मिन्** धर्मिणि न **विरुद्धौ** । **गुणविवक्षया** अप्रधानविवक्षया । **मुख्यविवक्षया** प्रधानविवक्षया । दृश्यते च लोके प्रधानाप्रधानविवक्षा, यथानुदरा कन्येत्यादि ॥ ३६ ॥

§ 36. ( हे वीर जिन ! ) **भेद** ( पृथक्त्व ) **और अभेद** ( एकत्व-अद्वैत ) **दोनों ( धर्म ) सत्रूप** है—परमार्थभूत है— **संवृतिके विषय नही**—कल्पनारोपित अथवा उपचारमात्र नही है, **क्योकि दोनो प्रमाणके विषय हैं**—( इसीसे ) **आपके मतमे वे दोनो एक वस्तुमे गौण और मुख्यकी विवक्षाको लिये हुए एकमात्र अविरोधरूपसे रहते है**—फलत जिनके मतमे भेद और अभेदको परस्पर निरपेक्ष माना है उनके यहाँ वे विरोधको प्राप्त होते हैं और वनते ही नही । ( ऐसी स्थितिमे (१) सर्वथा भेदवादी बौद्ध, जो पदार्थोके भेदको ही परमार्थ सत्के रूपमे स्वीकार करते है—अभेदको नही, अभेदको संवृति ( कल्पनारोपित ) सत् वतलाते हे और अन्यथा विरोधकी कल्पना करते हे, (२) सर्वथा अभेदवादी ब्रह्माद्वैती आदि, जो पदार्थो के अभेदको ही तात्त्विक मानते है—भेदको नही, भेदको कल्पनारोपित वतलाते है और अन्यथा दोनोमे परस्पर विरोधकी कल्पना करते है, (३) सर्वथा शून्यवादी बौद्ध, जो भेद और अभेद दोनोमेसे किसीको भी परमार्थ सत्के रूपमे स्वीकार नही करते किन्तु उन्हे संवृति-कल्पनाका विषय वतलाते है, और ( ४ ) उभयवादी नैयायिक, जो भेद और अभेद दोनोको सद्रूपमे मानते तो है, परन्तु दोनोको परस्पर निरपेक्ष वतलाते है, ये चारो ही यथार्थ वस्तु-तत्त्वका प्रतिपादन करनेवाले सत्यवादी नही हे । इन सबकी दृष्टिसे इस कारिकाके अर्थका स्पष्टीकरण निम्न प्रकार है—अभेद सत् स्वरूप ही है—संवृति ( कल्पना ) के विषयरूप नही, क्योकि वह भेदकी तरह प्रमाण-गोचर है । भेद सद्रूप ही है—संवृतिरूप नही, प्रमाण-गोचर होने से, अभेदकी तरह । भेद और अभेद दोनो सत् रूप है—संवृतिके विषयरूप नही, प्रमाण-गोचर होने से, अपने इष्ट तत्त्वकी तरह, और इस प्रकार एक अन्य पक्ष भी संगृहीत होता है, क्योकि उन दोनोको संवृतिरूप वतलानेवालो एवं वस्तुको समस्त धर्मो से शून्य माननेवालो ( शून्यवादियो ) का भी सद्भाव पाया जाता है । ( यहाँ इन पक्षोके अनुमानोमे जो-जो उदाहरण हैं वे साध्य-साधन-धर्मसे विकल ( रहित ) नही है, क्योकि भेद, अभेद, उभय और अनुभय एकान्तोंके माननेवालोमे उसकी प्रसिद्धि स्याद्वादियोकी तरह पाई जाती है । ) इस तरह हे वीर भगवान् ! आपके यहाँ एक वस्तुमे भेद और अभेद दोनो धर्म परमार्थसत्के रूपमे विरुद्ध नही है, मुख्य-गौणकी विवक्षाके कारण प्रमाण-गोचर होनेसे अपने इष्टतत्त्वकी तरह । और इसलिये सामर्थ्यसे यह अनुमान भी फलित होता है कि जो भेद और अभेद परस्परनिरपेक्ष हे वे विरुद्ध ही है, प्रमाण-गोचर होनेसे, भेदैकान्तादिकी तरह । यह स्पष्टीकरण श्रीविद्यानन्दाचार्यने अपनी अष्टसहस्री-टीकामे "इति कारिकायामर्थसंग्रह" इस वाक्यके साथ दिया है ॥३६॥

॥ इति देवागमाप्तमीमांसाया द्वितीय परिच्छेद ॥

# तृतीयपरिच्छेदः

37) **नित्यत्वैकान्तपक्षेऽपि विक्रिया नोपपद्यते ।**
**प्रागेव कारकाभावः क्व प्रमाणं क्व तत्फलम् ॥ ३७ ॥**

§ 37 **सदसदैकत्वपृथक्त्वैकान्तप्रतिषेधानन्तरं नित्यत्वैकान्तप्रतिक्षेपः । पूर्वापरस्वभावपरिहारावाप्तिलक्षणामर्थक्रियां कौटस्थ्येऽपि ब्रुवाणः कथमनुन्मत्तः, कारकज्ञापकहेतुव्यापारासंभवात् । परिणामविवर्तधर्मावस्थाविकाराणां स्वभावपर्यायत्वात् । तदेतद्विनाशोत्पत्तिनिवारणमबुद्धिपूर्वकम्, प्रत्यक्षादिविरोधात्, क्षणिकैकान्तवत् ॥ ३७ ॥**

§ 37 नित्यत्वैकान्तं निराकर्तुमाह—उक्तपक्षदोषभयान्नित्यत्वैकान्तपक्ष आश्रीयते, तत्रापि सतो भावस्यान्तरावाप्तिर्विक्रिया, सा **नोपपद्यते** न घटत इत्यर्थः । अत एव कारणात् **कारकाणि** कर्त्रादीनि तेषामभावः शून्यता । **प्रागेव** पूर्वमेव । तस्मिन्नभावे कारकविशेष**प्रमाण**वस्तु याथात्म्यप्रतिपादकं **क्व** तस्मिन् किन्तु न क्वचिदपि । तदभावे **क्व** प्रमाणफलमुपेक्षाहानोपादानादिकम् ॥ ३७ ॥

§ 37 **यदि नित्यत्व एकान्तका पक्ष लिया जाय**—यह माना जाय कि पदार्थ सर्वथा नित्य है, सदा अपने एक ही रूपमे स्थिर रहता है—**तो विक्रियाकी उपपत्ति नहीं हो सकती**—अवस्थासे अवस्थान्तररूप परिणाम, हलन-चलनरूप परिस्पन्द अथवा विकारात्मक कोई भी क्रिया पदार्थमे नही बन सकती, **कारकोका**—कर्त्ता, कर्म, करणादिका—**अभाव पहले ही** ( कार्योत्पत्तिके पूर्व ही ) **होता है**—जहाँ कोई अवस्था न बदले वहाँ उनका सद्भाव बनता ही नही—**और जब कारकोका अभाव है तब** (प्रमाताका भी अभाव होनेसे) **प्रमाण और प्रमाणका फल जो प्रमिति** ( सम्यग्ज्ञप्ति—यथार्थ जानकारी ) **ये दोनो कहाँ बन सकते हैं ?**—नही बन सकते । इनके तथा प्रमाताके अभावमे नित्यत्व एकान्तका पक्ष लेनेवाले सांख्योंके यहाँ जीवतत्त्वकी सिद्धि नही बनती और न दूसरे ही किसी तत्त्वकी व्यवस्था ठीक बैठती है ॥ ३७ ॥

38) **प्रमाणकारकैर्व्यक्तं व्यक्तं चेदिन्द्रियार्थवत् ।**
**ते च नित्ये विकार्यं किं साधोस्ते शासनाद् बहिः ॥ ३८ ॥**

§ 38 **अथ मतम् प्रमाणकारकाणि व्यवस्थितमेव भावं व्यञ्जयन्ति चक्षुरादिवत् स्वार्थम् । ततो न किंचिद्विप्रतिषिद्धम् । विषयविशेषविज्ञानादेः शाश्वतत्वान्न किंचिद् व्यक्तयर्थं[1] पश्यामः । कथंचिदपूर्वोत्पत्तौ तदेकान्तविरोधात् । तदभावविकार्यानुपपत्तेः । न वै किंचिद्विरुद्धं कार्यकारणभावाभ्युपगमात्, इत्यनालोचितसिद्धान्तम् ॥ ३८ ॥**

§ 38 मा भूद्विक्रिया व्यङ्ग्यव्यञ्जकभावो भविष्यत्यत आह—**प्रमाणानि** प्रत्यक्षादीनि । कर्तृकर्मकरणसप्रदानापादानाधिकरणानि **कारकाणि तैर्व्यक्तं** प्रकाशितं व्यञ्जितं कृतम् । **व्यक्तं** महदादि । यथेन्द्रियैश्चक्षुरादिभिरर्थो विषयः । **चेद्य**द्येवम् । **ते च** व्यङ्ग्यव्यञ्जके **नित्ये** अविचलि-

38) 1 P व्यक्तार्थं ।

तैकरूपे । किं विकार्यं यावता हि न किंचिदपि । तव **साधोर्मुने शासनात्** प्रवचनात् **बहिरन्ये**-ष्वयमेव हि विकारो यो वस्तुन्यन्यथाभावो व्यक्तिरप्यन्यथाभाव अव्यक्तात् । व्यक्तमन्यत् । तव शासने पुन सर्वं सुघटम् ॥ ३८ ॥

§ 38 ( यदि साख्यमत-वादियोकी ओरसे यह कहा जाय कि कारणरूप जो अव्यक्त पदार्थ है वह सर्वथा नित्य है, कार्यरूप जो व्यक्त पदार्थ है वह नित्य नही, उसे तो हम अनित्य मानते हैं और इसलिए हमारे यहाँ विक्रिया वनती हे, तो ऐसा कहना ठीक नही है, क्योंकि ) **इन्द्रियोके द्वारा उनके विषयकी अभिव्यक्तिके समान जिन प्रमाणो तथा कारकोके द्वारा अव्यक्तको व्यक्त हुआ बतलाया जाता है वे प्रमाण और कारक दोनो ही जब सर्वथा नित्य माने गये है तब उनके द्वारा विक्रिया वनती कौन-सी है ?**—सर्वथा नित्य के द्वारा कोई भी विकाररूप क्रिया नही वन सकती और न कोई अनित्य कार्य ही घटित हो सकता है । **हे साधो !** – वीर भगवन् !—**आपके शासनसे बाह्य**—आपके द्वारा अभिमत अनेकान्तवादकी सीमाके वाहर—**जो नित्यत्वका सर्वथा एकान्तवाद है उसमे विक्रियाके लिए कोई स्थान नहीं है**—सर्वथा नित्य कारणोसे अनित्य कार्योकी उत्पत्ति या अभिव्यक्ति वन ही नही सकती और इसलिये उक्त कल्पना भ्रममूलक है ॥ ३८ ॥

39) **यदि सत्सर्वथा कार्यं पुंवन्नोत्पत्तुमर्हति ।**
**परिणामप्रक्लृप्तिश्च नित्यत्वैकान्तबाधिनी ॥ ३९ ॥**

§ 39 **न तावत्सतः कार्यत्वं चैतन्यवत् । नाप्यसतः, सिद्धान्तविरोधात्, गगनकुसुमवत्**[1] **। नापरमेकान्तप्रकारान्तरमस्ति । विवर्तादेः पूर्वोत्तरस्वभावप्रध्वंसोत्पत्तिलक्षणत्वात् । तदेतत्त्रैलोक्यं व्यक्तेरपैति, नित्यत्वप्रतिषेधात्, अपेतमप्यस्ति, विनाशप्रतिषेधात्, इत्यनेकान्तोक्तिरन्धसर्पविलप्रवेशन्यायमनुसरति ॥ ३९ ॥**

§ 39 पुनरपि कदर्थयितुमाह—असत्किंचिदपि नोपपद्यते सर्वं सर्वत्र सर्वस्मादत आह—**यदि सर्वथा** विश्वप्रकारैर्यथा शक्त्यात्मना एव व्यक्तात्मनापि **कार्यं** घटादिकं **सत्** विद्यमानम् । पुमानिव **पुंवत्** साख्यपरिकल्पितपुरुषवत् । **नोत्पत्तु** नो प्रादुर्भवितु**मर्हति** योग्य भवति । यद्यत्सर्वथा सत् न तदुत्पद्यते । यथा साख्यपुरुष । सच्च सर्वथा कार्यं तस्मान्नोत्पद्यते । अथ व्यवस्था तस्य द्रव्यस्य धर्मान्तरत्यागेर्धर्मान्तरोपजनित परिणाम इष्यते । अत आह—**परिणामस्य प्रक्लृप्तिः** कल्पना समर्थन **च** सर्वस्य **नित्यत्वमिति** योऽयमेकान्तस्तस्य **बाधिनी** तन्निराकरणशीला विरोधिनी इत्यर्थ ॥ ३९ ॥

§ 39 ( यदि साख्योकी ओरसे यह कहा जाय कि हम तो कार्यकारण-भावको मानते है महदादि कार्य हे और प्रधान उनका कारण है—इसलिए हमारे यहाँ विक्रियाके वननेमे कोई वाधा नही आती, तो यह कहना अनालोचित सिद्धान्तके रूपमे अविचारित है, क्योंकि कार्यको सत् और असत् इन दो विकल्पोंके अतिरिक्त तीसरी कोई गति नहीं । ) **कार्यको यदि सर्वथा सत् माना जाय तो वह चैतन्यपुरुषकी तरह उत्पत्तिके योग्य नहीं ठहरता**—कूटस्थ

---

39) 1. As –कुसुमादिवत् ।

होनेसे उसमे उत्पत्ति जैसी कोई बात नही बनती, जिस प्रकार कि पुरुषमे नही बनती। दूसरे शब्दोमे यो कहिये कि जो सर्वथा सत् है उसके चैतन्यकी तरह कार्यत्व नही बनता, चैतन्य कार्य नही है, अन्यथा चैतन्यरूप जो पुरुष माना गया है, उसके भी कार्यत्वका प्रसग आएगा। अत जिस प्रकार सर्वथा सत्रूप होनेसे चैतन्य कार्य नही है उसी प्रकार महदादिकके भी कार्यत्व नही बनता। जब नई कार्योत्पत्ति ही नही तब विक्रिया कैसी ? और कार्यको यदि सर्वथा असत् माना जाय तो उससे सिद्धान्तविरोध घटित होता है, क्योकि कार्य-कारण-भावकी कल्पना करनेवाले साख्योके यहाँ कार्य सत् रूपमे ही माना है—गगन-कुसुमके समान असत्-रूपमे नही। ( यदि यह कहा जाय कि वस्तुमे अवस्थासे अवस्थान्तर होने रूप जो विवर्त है—परिणाम है—वही कार्य है तो इससे वस्तु परिणामी ठहरी ) **और वस्तुमे परिणामकी कल्पना ही नित्यत्वके एकान्तको बाधा पहुँचाने वाली है**—सर्वथा नित्यत्वके एकान्तमे कोई प्रकारका परिणाम, परिवर्तन अथवा अवस्थान्तर बनता ही नही ॥ ३९ ॥

40) **पुण्यपापक्रिया न स्यात् प्रेत्यभाव फलं कुतः ।**
**बन्धमोक्षौ च तेषां न येषां त्वं नासि नायक ॥ ४० ॥**

§ 40 **नैतत्प्रेक्षापूर्वकारिभिराश्रयणीयम्, पुण्यपापप्रेत्यभावबन्धमोक्षविकल्परहितत्वात्, नैरात्म्यादिवत् । न चैतत्क्वचिदेकान्ते संभवति ॥ ४० ॥**

§ 40 अतो बन्धमोक्षादिकमत्र न सभवति नित्यत्वात्प्रकृतिपुरुषयो । तव मते पुन. संभवतीत्याह—मैत्रीप्रमोदकरुणादिक्रियाभावे कुत पुण्यहेतुत्वात् **पुण्यम्** । हिंसादिरशुभपरिणाम पापहेतुत्वात्**पापम्** । तयो **क्रिया** क्षयोपार्जन **न स्यात्** न भवेत् । अत एव क्रियाभावे **कुतः प्रेत्यभावः** । जन्मान्तरफल च सुखदु खादिरूप कुत । **बन्धः** कर्मणा अस्वतन्त्रीकरणम्, **मोक्षः** स्वात्मोपलब्धि , एतौ **च** द्वौ **तेषा न** येषा त्व **नासि** न भवसि । **नायकः** प्रभु । किमुक्त भवति—एतत्सर्वं त्वच्छासन एव नान्येषा नित्यत्ववादिनाम्, कुत , विक्रियाभावात् ॥ ४० ॥

§ 40 ( ऐसी स्थितिमे हे वीरजिन ! ) **जिनके आप** (अनेकान्तवादी) **नायक** (स्वामी) **नहीं हैं उन सर्वथा नित्यत्वैकान्तवादियोके यहाँ** ( मत मे ) **पुण्य-पापकी क्रिया**—मन-वचन-कायकी शुभ या अशुभ प्रवृत्तिरूप अथवा उत्पादव्ययरूप कोई क्रिया—**नहीं बनती,** ( क्रियाके अभावमे ) **परलोक-गमन भी नहीं बनता,** ( सुख-दु खरूप ) **फलप्राप्तिकी तो बात ही कहाँसे हो सकती है ?**—वह भी नही बन सकती—**और न बन्ध तथा मोक्ष ही बन सकते हैं।**—तब सर्वथा नित्यत्वके एकान्तपक्षमे कौन परीक्षावान् किसलिए आदरवान् हो सकता है ? उसमे सादर-प्रवृत्तिके लिये किसी भी परीक्षकके वास्ते कोई भी आकर्षण अथवा कारण नही है ॥ ४० ॥

41) **क्षणिकैकान्तपक्षेऽपि प्रेत्यभावाद्यसंभवः ।**
**प्रत्यभिज्ञाद्यभावान्न कार्यारम्भ कुतः फलम् ॥ ४१ ॥**

§ 41 **क्षणक्षयैकान्तदर्शनमहितम्, असंभवत्प्रेत्यभावादित्वात्, उच्छेदैकान्तवत् ध्रौव्यैकान्ताभ्युपगमवद्वा । भिन्नकालक्षणानामसंभवद्वासनत्वात्, अकार्यकारणवत् । न विनष्टं कारणमसत्त्वात्, चिरतरातीतवत्, समनन्तरत्वेऽप्यभावाविशेषात् । न च पूर्वस्योत्तरं कार्यं**

तदसत्येव हि भावात्, वस्वन्तरवदतिक्रान्ततमवद्वा । न हि समर्थेऽस्मिन् सति स्वयमनुत्पित्सोः पश्चाद्भवतस्तत्कार्यत्वं समनन्तरत्वं वा युक्तं नित्यवत् । कारणाभावाविशेषेऽपि कार्योत्पत्तिसमयनियमावक्लृप्तौ कस्यचित् कौटस्थ्येऽपि तत्करणसामर्थ्यसद्भावाभेदेऽपि कार्यजन्मनः कालनियमः किं न स्यात्, विशेषाभावात् । तथा चाकस्मिकत्वं स्यात् । उभयत्राविशेषेण कथंचिदनुपयोगेऽपि क्वचिद् व्यपदेशकल्पनायामन्यत्रापि किं न भवेत् । क्षणस्थितिरेकोऽपि भावोऽनेकस्वभावः, चित्रकार्यत्वात्, नानार्थवत् । न हि कारणशक्तिभेदमन्तरेण कार्यनानात्वं युक्तम्, रूपादिज्ञानवत् । अन्यथा रूपादेर्नानात्वं न सिद्ध्येत्, चक्षुरादिसामग्रीभेदात्तज्ज्ञाननिर्भासभेदोऽवकल्प्येत । युगपदेकार्थोपनिबद्धदृष्टीनामपि भवितव्यमेव प्रतिभासभेदेन, कारणसामग्रीभेदात् । अन्यथा दर्शनभेदोऽपि माभूत् । प्रत्यासन्नेतरयोर्वैशद्येतरनिर्भासोपलब्धेः । सेयमुभयत पाशारज्जुः । सकृत्कारणस्वभावभेदमन्तरेण यदि कार्यनानात्वम्, क्रमशोऽपि कस्यचिदपेक्षितसहकारिणः कार्यसन्ततिः किं न स्यात् । सहकारिणस्तद्धेतुस्वभावमभेदयन्तोऽपि कार्यभेदहेतवः स्युः, क्षणक्षयवत् । न हि कादाचित्कानि तत्तत्कर्तुं समर्थानीति स्थिरोऽर्थस्तत्करणस्वभावं जहाति, तद्बुद्धिपूर्वकत्वाभावात् । क्षणिकसामग्रीसंनिपतितैककारणान्तरवत् । कल्पयित्वापि स्वहेतुप्रकृतिं भावाना स्वप्रकृतिरवश्यमन्वेष्या, तत्स्वभाववशात्तत्कारणप्रकृतिव्यवस्थापनात् । तदयमकारणोऽपि स्वभावनियतोऽर्थः स्यात् । यद्यद्भावं प्रत्यनपेक्षं तत्तद्भावनियतम्,[1]यथा विनाशं प्रत्यनपेक्षं विनश्वरम् । तथैव स्थितिं प्रत्यनपेक्षं स्थास्नु, तद्धेतोरकिंचित्करत्वात्, तद्व्यतिरिक्ताव्यतिरिक्ताकरणात्[2] इत्यादि सर्वं समानम् । आदौ स्थितिदर्शनात्, शब्दविद्युत्प्रदीपादेरन्तेऽपि स्थितेरनुमानं युक्तम् । अन्यथान्ते क्षयदर्शनादादौ तत्प्रतिपत्तिरसमञ्जसैव । तादृशः कारणादर्शनेऽपि कथंचिदुपादानानुमानवत्, तत्कार्यसन्तानस्थितिरदृष्टाप्यनुमीयेत । तस्मात्कथंचन स्थितिमतः प्रतिक्षणं विवर्तोऽपि नान्यथा, प्रभवादेरयोगात् कुतः प्रेत्यभावादिः । सत्यपि हेतुफलभावेऽकारणकार्यान्तरवत् सततिर्न स्यात् । अतादात्म्याविशेषात् । तत्स्वभावविशेषावक्लृप्तौ तादात्म्ये[3] कोऽपरितोष । विरोधस्य सर्वथाप्यपरिहार्यत्वात् । तत्सन्तानापेक्षया प्रेत्यभावादि मा भूत । ज्ञानज्ञेययो. प्रतिक्षण विलक्षणत्वात् । न वै प्रत्यभिज्ञानादिः[4] पुरुषान्तरवदर्थान्तरवच्च । ततः कर्मफलसंबन्धोऽपि नानासन्तानवदनियमान्न युक्तिमवतरति । तत्सूक्तम्—क्षणिकपक्षो [5]बुद्धिमद्भिरनादरणीयः, सर्वथार्थक्रियाविरोधात्, नित्यत्वैकान्तवत् । सत्येव कारणे यदि कार्यं त्रैलोक्यमेकक्षणवर्ति स्यात, ततः सन्तानाभावात्, पक्षान्तरासंभवाच्चेति स्थितमेतत्[6] ॥ ४१ ॥

§ 41 न केवल नित्यैकान्त एतेषामभाव किन्तु—क्षणिको निरन्वयविनाश स एवैकान्तपक्षस्तस्मिन्नपि, प्रेत्यभावादीना जन्मान्तरादीनामसंभवोऽभाव । प्रत्यभिज्ञा स एवायमिति ज्ञान सा आदिर्येषा ते प्रत्यभिज्ञादयस्तेषामभावस्तस्मान्न कार्यारम्भ ओदनघटादेरारम्भ आदिक्रिया । अत कुतः फल समर्पणादिक परिहारोऽनिष्टस्य । अस्मादेतत्कार्यं भविष्यति नान्यस्मादेतदपि न सभवत्येव । आदिशब्देन पर्यालोचनाध्यवसायादोना ग्रहणम् । यदि कश्चित् स्थिर कर्ता स्यादुपादानादीन्यपि यदि स्थिराणि सन्त्यस्य कार्यस्य, एतद्योग्यमेव[7] तन्निराकरणमपि । कथंचिद्यदि कार्यरूपेण परिणमति तदा सर्वं सुघट नान्यथा ॥ ४१ ॥

---

41) 1 P तथा । 2 P –कारणात् । 3. P –त्म्येऽपि । 4 P –ज्ञादि । 5. P विद्वद्भिर– । 6. As–मेव । 7. P – योग एव ।

§ 41 ( नित्यत्वैकान्तमे दोष देखकर ) **यदि क्षणिक एकान्तका पक्ष लिया जाय**—बौद्धोंके सर्वथा अनित्यत्वरूप एकान्तवादका आश्रय लेकर यह कहा जाय कि सर्व पदार्थ क्षण-क्षणमे निरन्वय-विनाशको प्राप्त होते रहते हैं, कोई भी उनमे स्थिर नही है—**तो भी प्रेत्यभावादिक असंभव ठहरते हैं**—परलोकगमन और बन्ध तथा मोक्षादिक नही बन सकते। ( इसके सिवाय प्रत्यभिज्ञान, स्मरण और अनुमानादि जैसे ज्ञान भी नही बन सकते ) **प्रत्यभिज्ञानादि जैसे ज्ञानोंका अभाव होनेसे कार्यका आरम्भ नही बनता और जब कार्यका आरम्भ ही नहीं तब उसका** ( सुख-दु खादिरूप अथवा पुण्य-पापादिरूप ) **फल तो कहांसे हो सकता है ?**—नही हो सकता। अत सर्वथा क्षणिकैकान्त भी परीक्षावानोके लिये आदरणीय नही है ॥ ४१ ॥

42) **यद्यसत्सर्वथा कार्यं तन्माजनि खपुष्पवत् ।**
**मोपादाननियामोऽभून्माश्वासः कार्यजन्मनि ॥ ४२ ॥**

§ 42 **कथंचित् सतः कार्यत्वमु[1]पादानस्योत्तरीभवनात, सकृदपि विरुद्धधर्माध्यासानिराकृते । तथा चान्वयव्यतिरेकप्रतीतेर्भावस्वभावनिबन्धनायाः किं फलमपलापेन । तदन्यतरनिराकृतावुभयनिराकृति., अभेदात् । तन्नासत्कार्यम्, [2]सर्वथाप्यनुत्पादप्रसङ्गात्, खपुष्पवत् । न तादृक्कारणवत्, सर्वथाभूतत्वात्, वन्ध्यासुतवत् । कथंचिदस्थितानुत्पन्नत्वादिति योज्यम् । सत्यपि प्रभवलक्षणे पूर्वपूर्वस्योत्तरीभवने मृत्पिण्डस्यासकोशकुशूलादिषु सकललोकसाक्षिक, स्वमनीषिकाभिः सदृशापरापरोत्पत्तिविप्रलम्भानवधारणावक्लृप्तिमारचयता मोपादाननियामोऽभूत्कारणान्तरवत्, तदन्वयाभावाविशेषात्, सर्वथा वैलक्षण्यात् । निरन्वयस्यापि तादृशी प्रकृतिरात्मानं कारणान्तरेभ्यो यया विशेषयतीति चेत्, न, अत्यन्तविशेषानुपलब्धे. । तद्विशेषादर्शने सर्वथान्ध्य[3] स्यात् । तस्मात् इयमस्य प्रकृतिर्यया पूर्वोत्तरस्वभावहानोपादानाधिकरणस्थितिं प्रतिक्षण बिभर्ति यतोऽयमुपादाननियम. सिद्धः । अथापि कथंचिदुपादाननियमः कल्प्येत, कार्यजन्मनि कथमाश्वास , तदत्यन्तासतः कार्यस्योत्पत्तेस्तन्तुभ्य. पटादिरेव न [4]घटादिरिति निर्हेतुको नियमः स्यात् । पूर्वपूर्वविशेषादुत्तरोत्तरनियमकल्पनायामनुपादानेऽपि स्यात् । तथादर्शनमहेतुरत्रैव, विचारात् कथंचिदाहितविशेषतन्तूनां पटस्वभावप्रतिलम्भोपलम्भात् । तदन्यतरविधिप्रतिषेधनियमनिमित्तात्ययात् प्रतीतेरलमपलापेन । [5]तस्मादुपलब्धिलक्षणप्राप्तानुपलब्धिरनन्वयस्यैव न पुनरुभयरूपस्येत्यलं प्रसङ्गेन ॥ ४२ ॥**

§ 42 तत्र कारणे कार्यं मनागपि नास्तीति चेदत आह—सर्वथा शक्तिव्यक्तिस्वरूपेण **यदसत्** अविद्यमान **तत्कार्यं माजनि** माभूत् । खपुष्प गगनकुसुम तदिव **खपुष्पवत्** । **उपादानं** मृत्पिण्डतन्त्वादिक, तस्य **नियामोऽ**स्मादेतत्कार्यं भवतीति निश्चय., सोऽपि **माभूत्** । **आश्वासः** अस्मादेतद्भविष्यति, अयमपि माभूत् । **कार्यजन्मनि** कार्योत्पत्तौ ॥ ४२ ॥

§ 42 ( क्षणिकैकान्तमे कार्यका सत्-रूपसे उत्पाद तो बनता ही नही, क्योकि उसमे सिद्धान्त-विरोध घटित होता है—क्षणिक एकान्तमे किसी भी वस्तुको सर्वथा सत्-रूप नही माना गया है। तब कार्यको असत् ही कहना होगा। ) **यदि कार्यको सर्वथा असत् कहा जाय**

---

42) 1 A, B –त्वोपा– । 2 P सर्वथानु– । 3 P साध्य । 4. As कुटादि । 5 P –दुभय– ।

**तो वह आकाशके पुष्प-समान न होने रूप ही है। यदि असत्का भी उत्पाद माना जाय तो फिर उपादानकारणका कोई नियम नही रहता और न कार्यकी उत्पत्तिका कोई विश्वास ही बना रहता है**—गेहूँ बोकर उपादानकारणके नियमानुसार हम यह आशा नही रख सकते कि उससे गेहूँ ही पैदा होगे, असदुत्पादके कारण उससे चने, जौ या मटरादिक भी पैदा हो सकते है और इसलिए हम किसी भी उत्पादन कार्यके विषयमे निश्चित नही रह सकते, सारा ही लोक-व्यवहार विगड जाता है और यह सब प्रत्यक्षादिकके विरुद्ध है ॥ ४२ ॥

43) **न हेतुफलभावादिरन्यभावादनन्वयात् ।**

**सन्तानान्तरवन्नैकः सन्तानस्तद्वतः पृथक् ॥ ४३ ॥**

§ 43 **विलक्षणानामत्यन्तभेदेपि स्वभावत. किलासंकीर्णा. सन्ततयः कर्मफलसंबन्धादिनिबन्धनं शशविषाणस्येव वर्तुलत्वमारचितं कश्चेतनः श्रद्दधीत ॥ ४३ ॥**

§ 43 पुनरपि दोषमुद्भावयितुमाह—क्षणिकैकान्तपक्षे हेतु कारणम्। फल कार्यं तयोर्भावोऽस्तित्व स आदिर्यस्य स हेतुफलभावादिरुपादानोपादेयस्वरूप कार्यकारणभावो वाच्यवाचकभावश्च न स्यात्। कुत । अन्यभावादत्यन्तपृथक्त्वात्। तदपि कुत । अनन्वयादेकस्य पूर्वापरावस्थाभावात्। तथा सन्तानान्तरे प्रस्तुतसन्तानादन्य सन्तान सन्तानान्तरं तस्मिन्यथा न सभवति कार्यकारणभाव मृत्पिण्डात्पट इव। अभ्युपगम्यैतदुक्त परमार्थतस्तु सन्तानिभ्यो भिन्नेभ्य पृथग्भूतेपु ततो न कश्चिदेकः सन्तानोऽनुगतैकाकार । अन्यान्यभावाभ्या निराकृतत्वात्। तस्मान्न सन्तानो नापि सन्तानिन इति ॥ ४३ ॥

§ 43 ( इसके सिवाय ) **क्षणिकैकान्तमे पूर्वोत्तरक्षणोके हेतुभाव और फलभाव आदि कभी नही बनते; क्योकि सर्वथा अन्वयके न होनेके कारण उन पूर्वोत्तरक्षणोमे सन्तानान्तरकी तरह सर्वथा अन्यभाव होता है।** ( यदि यह कहा जाय कि पूर्वोत्तर-क्षणोका सन्तान एक है तो यह ठीक नही, क्योकि **जो एकसन्तान होता है वह सन्तानीसे पृथक् नहीं होता**—सर्वथा पृथक्रूपमे उसका अस्तित्व वनता ही नही ॥ ४३ ॥

44) **अन्येष्वनन्यशब्दोऽयं संवृतिर्न मृषा कथम् ।**

**मुख्यार्थः संवृति[1]र्न स्यात् विना मुख्यान्न संवृतिः ॥ ४४ ॥**

§ 44 **संतानिभ्योऽनन्यः संतानः अन्यथात्मनो नामान्तरकरणात् नित्यानित्यविकल्पानुपपत्तेः, अपि तु [2]संवृत्यान्येष्वनन्यव्यवहारादेकत्वमुपचरितमिति। व्यलीकव्यवहारेऽपि विशेषानुपपत्तेः सबन्धनियमाभावस्तदवस्थः। उपचारस्तु नर्ते मुख्यात्, यथाग्निर्माणवक इति स्खलति हि तत्रानन्यप्रत्यय , परीक्षाक्षमत्वात्। अत एवामुख्यार्थं प्रस्तुतासाधनम् ॥ ४४ ॥**

§ 44 पुनरपि तस्य दूषणमाह—सत्य सन्तानिभ्यो व्यतिरिक्त सन्तानो नास्ति किंतु अन्येषु पृथग्भूतेपु योऽयमनन्यशब्दोऽनन्यबुद्धिश्च सन्तान सा संवृतिरुपचार । यद्येव कथं सा न मृषा व्यलीका भवेत्। न च मुख्यार्थ. संवृतिरस्ति, तस्यास्तुच्छरूपत्वात्। सवृतिस्तूपचार । न च मुख्यार्थमन्तरेण संवृति , सति मुख्यार्थे तस्या सभवो यथा सिहोऽय माणवक सति मुख्यसिंहे माणवके सिहकल्पना। न चैव सवृतेरस्ति मुख्यार्थ इति ॥ ४४ ॥

44) 1 A P नास्ति। 2 P तु तेष्वनन्य–।

§ 44. यदि ( बौद्धोकी ओरसे ) **यह कहा जाय कि अन्योमें अनन्य शब्दका यह जो व्यवहार है**—सर्वथा भिन्न चित्त-क्षणोको जो सन्तानके रूपमे अनन्य, अभिन्न अथवा एक आत्मा कहा जाता है—**वह संवृति है**—काल्पनिक अथवा औपचारिक है, वास्तविक नही—**तो सर्वथा संवृतिरूप होनेसे वह मिथ्या क्यो नहीं है ?** अवश्य ही मिथ्या है, और इसलिये उसके आधार-पर सन्तान आत्मा जैसी कोई वस्तु व्यवस्थित नही बनती। **यदि संतानको मुख्य अर्थके रूपमे माना जाय तो जो मुख्यार्थ होता है वह सर्वथा संवृतिरूप नही होता और यदि संवृतिरूपमे उसे माना जाय तो संवृति विना मुख्यार्थके बनती नहीं**—मुख्यके विना उपचारकी प्रवृत्ति होती ही नही, जैसे सिंहके सद्भाव-विना सिंहका चित्र नही बनता ॥ ४४ ॥

45) **चतुष्कोटेर्विकल्पस्य सर्वान्तेषूक्त्ययोगतः ।**
**तत्त्वान्यत्वमवाच्यं चेत्तयोः सन्तानतद्वतो'** ॥ ४५ ॥

§ 45 **सत्त्वैकत्वादिषु सर्वधर्मेषु सदसदुभयानुभयादिचतुष्कोटेरभिधातुमशक्यत्वात् सन्तान-तद्वतोरपि भेदाभेदोभयानुभयचतुष्कोटेरनभिलाप्यत्वम् । सत्त्वे तदुत्पत्तिविरोधादसत्त्वे पुन-रुच्छेदपक्षोपक्षिप्तदोषादुभयत्रोभयदोषप्रसङ्गादनुभयपक्षेऽपि विकल्पानुपपत्तिरित्यादि योज्यम्** ॥ ४५ ॥

§ 45 अथैव परिकल्प्यते—यथा सर्वधर्मेषु चतस्र' कोट्यो सत्त्वैकत्वादिषु विभागा यस्यासौ **चतुष्कोटिर्विकल्पस्तस्य** सदसदुभयादिभेदभिन्नस्य विकल्पस्य। **उक्तिर्वचन** तस्या **अयोगो**ऽसभव तत । **तयोः संतानतद्वतोश्चतुष्कोटेर्विकल्पस्य** वचनस्यायोगात्तत्त्वान्यत्वमेकत्वानेकत्वम-**वाच्यम्** ॥ ४५ ॥

§ 45 **यदि** ( बौद्धोकी ओरसे ) **यह कहा जाय कि चूंकि सब धर्मोमें चतुष्कोटिविकल्पके कथनका अयोग है**—सत्त्व-एकत्वादि किसी भी धर्मके विषयमे यह कहना नही बन सकता कि वह सत्-रूप है या असत्-रूप है अथवा सद्-असत् दोनो ( उभय ) रूप है या दोनो रूप नही ( अनुभयरूप ) है, क्योकि सर्वथा सत् कहनेपर उसकी उत्पत्तिके साथ विरोध आता है, सर्वथा असत् कहनेपर शून्य-पक्षमे जो दोप दिया जाता है वह घटित होता है, सर्वथा उभयरूप कहनेपर दोनो दोपोका प्रसग आता है और सर्वथा अनुभय पक्षके लेनेपर वस्तु निर्विषय, नीरूप, नि स्वभाव अथवा निरुपाख्य ठहरती है और तव उसमे किसी भी विकल्पकी उत्पत्ति नही बनती—**अतः उन सन्तान सन्तानीका भी तत्त्व** ( एकत्व–अभेद ) **धर्म तथा अन्यत्व** ( नानात्व–भेद ) **धर्म** ( धर्म होनेसे ) **अवाच्य ठहरता है।** तदनुसार उभयत्व-अनुभयत्व धर्म भी ( अवाच्य ठहरते हैं ) क्योकि वस्तुके धर्मको वस्तुसे सर्वथा अनन्य ( अभिन्न ) कहनेपर, वस्तुमात्रका प्रसग आता है, वस्तुसे सर्वथा अन्य ( भिन्न ) कहनेपर व्यपदेशकी सिद्धि नही होती अर्थात् यह कहना नही बनता कि अमुक वस्तुका यह धर्म है, सर्वथा उभय ( भिन्नाऽभिन्न ) कहनेपर दोनो दोष आते हैं और सर्वथा अनुभय ( न भिन्न और न अभिन्न ) कहनेपर वस्तु निरुपाख्य एव नि स्वभाव ठहरती है—इससे सन्तान—सन्ततिके धर्म-विषयमे कुछ भी कहना नही बनता, ( तो यह कथन ठीक नही है, क्योकि ) ॥ ४५ ॥

46) **अवक्तव्यचतुष्कोटि[1]विकल्पोऽपि न कथ्यताम् ।**
**असर्वान्तमवस्तु स्यादविशेष्यविशेषणम् ॥ ४६ ॥**

§ 46. **न हि सर्वथाऽनभिलाप्यत्वेऽनभिलाप्यचतुष्कोटेरभिधेयत्वं युक्तम्, कथंचिदभिलाप्यत्वप्रसङ्गात् । अपि चैवं सति सर्वविकल्पातीतमवस्त्वेव स्यादन्यत्र वाचोयुक्ते ॥ ४६ ॥**

§ 46 चेदत आह–तर्हि **अवक्तव्यचतुष्कोटिविकल्पोऽपि** य सोऽपि **न कथ्यता** माभाणीदित्यर्थ । अन्यथा भेदाभेदोभयानुभयस्वरूपेणाभिलाप्यत्वे कथंचिदनभिलाप्यत्व स्यात् । अन्यच्चैव सति **असर्वान्तं** सर्वविकल्पातीत**मवस्तु स्यात्** । **अविशेष्यविशेषणं** स्यात् । विशेष्यत इति विशेष. विशेष्यतेऽनेनेति विशेषण तयोरभावात् ॥ ४६ ॥

§ 4७ **तब तो** ( बौद्धोको ) **'चतुष्कोटिविकल्प अवक्तव्य है' यह भी नहीं कहना चाहिये;**—क्योकि सब धर्मोमे उक्तिका अयोग बतलाने अर्थात् सर्वथा अवक्तव्य ( अनभिलाप्य ) का पक्ष लेने पर 'चतुष्कोटिविकल्प अवक्तव्य है' यह कहना भी नही बनता, कहनेसे कथंचित् वक्तव्यत्वका प्रसग उपस्थित होता है और न कहने से दूसरोको उसका बोध नही कराया जा सकता । ऐसी स्थितिमे उसके सर्वविकल्पातीतत्व फलित होता है । **जो सर्वविकल्पातीत है वह असर्वान्त** ( सब धर्मो से रहित ) है **और जो असर्वान्त है वह** ( आकाश-कुसुमके समान ) **अवस्तु है; क्योकि उसके विशेष्य-विशेषणभाव नहीं बनता**—न वह विशेष्य है और न विशेषण । और यदि यह कहा जाय कि स्वसवेदनमे विशेषण-विशेष्य-रहित ही तत्त्व प्रतिभासित होता है तो वह ठीक नही, क्योकि स्वसवेदनके भी सत्त्व ( अस्तित्व ) विशेषणकी विशिष्टता से विशेष्यका ही अवभासन होता है । स्वसवेदन के उत्तरकालमे होनेवाले विकल्पबुद्धिमे 'स्वका सवेदन' इस प्रकार विशेषणविशेष्यभाव अवभासित होता है—स्वसवेदनके स्वरूपमे नही । यदि यह कहा जाय कि स्वसवेदन अविशेष्य-विशेषणरूप है और वह स्वत प्रतिभासित होता है तो इससे ( भी ) स्वसवेदन मे विशेषण-विशेष्यभाव सिद्ध होता है, क्योकि वैसा कहनेपर अविशेषणविशेष्यत्व ही विशेषण हो जाता है । ) ॥ ४६ ॥

47) **द्रव्याद्यन्तरभावेन निषेधः संज्ञिनः सतः ।**
**असद्भेदो न भावस्तु स्थानं विधिनिषेधयोः ॥ ४७ ॥**

§ 47 **द्रव्यक्षेत्रकालभावान्तरैः प्रतिषेधः संज्ञिनः सतः क्रियेत,[1] न पुनरसतस्तद्विधिप्रतिषेधाविषयत्वात् । न चैतद्विरुद्धं स्वलक्षणमनिर्देश्यमित्यादिवत् । अभावोऽनभिलाप्य इत्यपि भावाभिधानादेकान्तवृत्तावेव दोषात् । भावाभिधानैरपि कथंचिदभावाभिधानात् ॥ ४७ ॥**

§ 47 अन्यच्च प्रतिषेधोऽपि न घटते, तत्कथमत आह–द्रव्यमादिर्येषा ते द्रव्यक्षेत्रकालभावास्तेभ्योऽन्यानि **द्रव्याद्यन्तराणि** तेषा **भाव**स्तेन परद्रव्यपरक्षेत्रपरकालपरभावस्वरूपेण य **प्रतिषेध. सतो** विद्यमानस्य । **संज्ञिनो** नामवतो भवति । य पुनर**सद्भेदो**ऽभावविशेष परकल्पितो नासौ **भाव.** स्वलक्षणम् । **विधिनिषेधयो**रस्तित्वनास्तित्वयो । **स्थानमा**स्पदम् । कुत । सर्वथा तस्य तुच्छत्वात् । तस्माद्भाव एव विधिनिषेधयोरवस्थान तस्यैव स्वपररूपेणास्तित्वनास्तित्वम् ॥४७॥

46) 1 A -कोटे- ।
47) 1 P क्रियते ।

